# श्रीहरिलीलामृतम्

## श्रीवोपदेवेन विरचितम्[1]

April 15, 2004

[1]Produced from two editions: *The Harilīlāmṛtam* by Śrī Bopadeva with the commentary of Śrī Madhusūdana Sarasvatī edited with introduction by Parajuli Pandit Devidatta Upadhyaya. (Benares: The Chowkhamba Sanskrit Series Office, 1933.) and *Śrīvopadevakṛtā śrīharilīlā śrīhemādrikṛta-harilīlāvivekākhyaṭīkayā saṃvalitā*. Edited by Nityasvarūpa Brahmacārin. (British Library shelf mark: San.H.4.)

# Contents

# Chapter 1

## प्रथमस्कन्धकथासारः

श्रीमद्भागवतस्कन्धाध्यायार्थादि निरूप्यते।
विदुषा वोपदेवेन मन्त्रिहेमाद्रितुष्टये॥ १॥

आनन्दस्य हरेर्लीलां वक्ता भागवतागमः।
स्कन्धैर्द्वादशभिः शाखाः प्रतन्वन् द्विजसेविताः॥ २॥

सा च द्वितीयदशमे दशधा दर्शिता यथा।
अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः॥ ३॥

मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः।
सर्गादयस्तृतीयादिस्खन्देषूक्ता दश क्रमात्॥ ४॥

श्रोतुर्वक्तुश्च लक्ष्माद्ये द्वितीये श्रवणे विधिः।
इतीदं द्वादशस्कन्धं पुराणं दशलक्षणम्॥ ५॥

प्रथमेऽष्टादशाध्यायास्तत्र प्रकरणत्रयम्।
त्रित्रिद्वादशभिर्लक्ष्यहीनमध्योत्तमत्वतः॥ ६॥

श्रोतारः शौनको व्यासः परीक्षिच्चोत्तमाः क्रमात्।
वक्तारोऽपि तथा सूतो नारदः शुक इत्यमी॥ ७॥

वैराग्यस्य प्रकर्षेण प्रकर्षोऽत्र विवक्षितः।
तल्लक्षणपरः श्रोतुं वक्तुं चार्हति संहिताम्॥ ८॥

पुराणेष्वितिहासैर्हि लक्षणादिनिरूपणम्।
वेदः पुराणं काव्यं च प्रभुर्मित्रं प्रियेव च।
बोधयन्तीति हि प्राहुस्त्रिवद्भागवतं पुनः॥ ९॥

पञ्च प्रश्नाः शौनकय्स सूतस्यात्रोत्तरं त्रिषु॥ १०॥

अवतारप्रश्नयोश्च व्यासस्यानिर्वृतिः क्रमात्।
नारदस्यात्र हेतूक्तिः प्रतीत्यर्थं स्वजन्म च॥ ११॥

सुप्तघ्नद्रौण्यभिभ्भवस्तदस्त्रात्पाण्डवावनम्।
भीष्मस्य स्वपदप्राप्तिः कृष्णस्य द्वारकागमः॥ १२॥

श्रोतुः परीक्षितो जन्म धृतराष्ट्रस्य निर्गमः।
कृष्णमर्त्यत्यागसूचा ततः पार्थमहापथः॥ १३॥

भूधर्मयोः कलेर्भीतिस्ततस्त्राणं परीक्षिता।
परीक्षितो ब्रह्मशापः प्रायेण शुकसङ्गमः॥ १४॥

इत्यष्टादशभिः पादैरध्यायार्थाः क्रमात्स्मृतः।
स्वपरप्रतिबन्धोनं स्फीतं राज्यं जहौ नृपः॥ १५॥

इति वैराग्यदार्ढ्योक्त्यौ प्रोक्ता द्रौणिजयादयः॥ १६॥

श्रीभागवते प्रथमस्कन्धः समाप्तः॥

# Chapter 2

## द्वितीयस्कन्धकथासारः

द्वितीये श्रवणाङ्गानि ध्यानं श्रद्धा विमर्शनम्।
द्विद्विषड्भिर्दशाध्याये ध्यानं साधारणे हरेः।
देहेऽसाधारणे जीवैः श्रद्धा श्रोतरि वक्तरि॥ १॥

उत्पत्तौ चोपपत्तौ च विमर्शस्तत्र देहयोः।
उत्पत्तिस्त्रिविधाद्यस्य मूर्तामूर्तविभेदतः॥ २॥

उपपत्तिस्त्रिधाक्षेपसमाधानप्रयोजनैः।
त्रयाणां दशभिर्भेदैरित्यध्याया दश क्रमात्॥ ३॥

श्रीभागवते द्वितीयस्कन्धः समाप्तः॥

# Chapter 3

## तृतीयस्कन्धकथासारः

तृतीये तु त्रयस्त्रिंशदध्यायाः सर्गवर्णने।
सर्गः कारणसम्भूतिर्भिन्ना सा योगसाङ्ख्ययोः॥ १॥

विदुरायोक्तवान् योगं मैत्रेयो देवहूतये।
कपिलः साङ्ख्यमित्येताविति हासाविहोदितौ॥ २॥

ऊनविंशतिराद्योऽत्र चतुर्भिर्विदुरागमः।
अष्टभिः सर्गविस्तारः सप्तभिः क्रीडता हरेः॥ ३॥

सर्गाधारधरोद्धर्तुर्द्वितीयस्तु चतुर्दश।
एकेन तत्र सङ्क्षिप्तः सर्गस्तद्विस्तरोक्तये॥ ४॥

चतुर्भिः कपिलोत्पत्तिर्नवभिः कपिलोक्तयः।
बन्धुभिः क्षत्तुरुद्वासस्तद्धतेः श्रुतिरुद्धवात्॥ ५॥

कृष्णावतारावसतेर्मैत्रेयात्स्वहितस्य च।
सत्रयोविंशतेर्जन्म सद्भिर्व्यक्तिः परात्मनः॥ ६॥

सम्यग्बुद्धा पुनः प्रश्नः सद्यक्तात्पद्मजोद्भवः।
पद्मजेन स्तुतिस्तस्य सर्गाः कालोक्तये दश॥ ७॥

कालांशाः परमाण्वाद्या ब्रह्मपुत्रसमुद्भवः।
आविर्भावो वराहस्य गर्भाधानं च दैत्ययोः॥ ८॥

शापो मुनिभ्यो वैकुण्ठे विष्णूक्तेभ्यस्त्वनुग्रहः।
हिरण्याक्षस्य सामर्थ्यं वराहेण च सङ्गरः॥ ९॥

वधश्च देवस्तोत्रेषु कारणोक्तिः समासतः।
कर्दमेन हरेस्तोषो देवहूतेः करग्रहः॥ १०॥

तयोर्विचित्रसम्भोगस्ताभ्यां कपिलजन्म च।
लक्षणं भगवद्भक्तेः सचतुर्विंशतेस्तथा॥ ११॥

असत्पुरुषयोश्चैव ज्ञानयोगस्य च क्रमः।
भक्तियोगस्य कालारेः पापात्तामस्यधो गतिः॥ १२॥

राजस्यन्तः पुण्यपापात् सात्त्विक्यूर्द्ध्वं च पुण्यतः।
देवहूतिवदात्माप्तिरध्यायार्था इमेऽङ्घ्रिभिः॥ १३॥

श्रीभागवते तृतीयस्कन्धः समाप्तः॥

# Chapter 4

# चतुर्थस्कन्धकथासारः

एकोनत्रिंशताऽध्यायैर्विसर्गस्तुर्य ईरितः।
विसर्गः कार्यसम्भूतिः कार्यं बुद्ध्वा चतुर्विधम्॥ १॥

स्त्रीबालप्रौढवृद्धत्वैश्चतुष्प्रकरणी कृता।
सतीध्रुवपृथुप्राचीनेतिहासैस्तदुक्तये॥ २॥

सप्तभिश्च चतुर्भिश्च दशभिश्चाष्टभिस्तथा।
मनुकन्याअन्वयः सत्यै द्विषस्तत्पतितातयोः॥ ३॥

पत्या निषेधनं सत्या देहत्यागः पितुर्मखे।
गणैर्दक्षमखध्वंसो ब्रह्मणा रुद्रसान्त्वनम्॥ ४॥

विष्णुना यज्ञसंसिद्धिर्ध्रुवेणाराधनं हरेः।
कामलाभो ध्रुवस्याऽस्माद्यक्षान्ताद्धारणं मनोः॥ ५॥

विष्णोर्ध्रुवपदप्राप्तिः पृथवे वेनसम्भवः।
वेनबाहोः पृथूत्पत्तिः सूताद्यैः स्तवनं पृथोः॥ ६॥

पृथुना निग्रहो भूमेस्तत्तद्दुग्धस्य दोहनम्।
जयोऽश्वमेधे शक्रस्य साक्षात्कारो मधुद्विषः॥ ७॥

सभामध्ये स्वधर्मोक्तिः कुमारेभ्यः परात्मधीः।
तथा वने स्वधर्माप्तिस्तपः पित्रे प्रचेतसाम्॥ ८॥

ध्यात्मोक्तिर्नारदेनास्मै पापर्द्धिस्तां विनात्मनः।
कालाभिभूतिस्तच्छक्तेर्मुक्तिर्द्वन्द्वविपर्यये॥ ९॥

पुरञ्जनादिव्याख्यानं तपःसिद्धिः प्रचेतसाम्।
दक्षमुत्पाद्य निर्वाणमध्यायार्थस्पृशोऽङ्घ्रयः॥ १०॥

उपक्रमोपसंहारौ प्रचेतोभिस्तदात्मजैः।
तथाप्यध्यात्मपारोक्ष्याच्छ्रैष्ट्यं प्राचीनबर्हिषः॥ ११॥

पुण्यं पुत्रस्य पितुरप्यन्तःकरणशुद्धये।
भवेदिति द्योतयितुं प्रचेतोवृत्तवर्णनम्॥ १२॥

श्रीभागवते चतुर्थस्कन्धः समाप्तः॥

# Chapter 5

## पञ्चमस्कन्धकथासारः

पञ्चमे स्थानमध्यायैः षड्विंशत्या निरूपितम्।
मर्यादापालनं स्थानं तास्तिस्रो लोकभेदतः॥ १॥

लोकाः क्षितिर्द्यौः पातालं प्रियव्रततदुद्भवैः।
क्षितेर्द्वीपादिमर्यादाः कृताः प्राक्तत्तदन्वयः॥ २॥

एवं च पञ्चदशभिः पञ्चभिश्च त्रिभिस्त्रिभिः।
चतुःप्रकरणी प्रोक्ताऽध्यायार्थान् क्रमतः शृणु॥ ३॥

प्रियव्रताग्नीध्रनाभिष्वेकैक ऋषभे त्रयः।
राजोपदेष्टृमुक्तत्वैर्भरतेऽष्टौ प्रपौत्रजे॥ ४॥

पुण्यैणसङ्गजडताशिबिकोढिप्रकाशनैः।
तत्त्वाख्यानभवारण्यतद्व्याख्यानैः परोऽन्वये॥ ५॥

मेर्विलावृतषड्द्विवर्षद्वीपैश्च पञ्च कौ।
दिवि क्रमात्त्रयः सूर्यध्रुवसूर्यान्तरध्रुवः॥ ६॥

पातालशेषनरकैस्त्रयोऽधोभुवने मताः।

# Chapter 6

## षष्ठस्कन्धकथासारः

षष्ठ एकोनविंशत्या पुष्टिः सानुग्रहो हरेः।
कर्मणा येन यैर्यत्र स्थातव्यं तेन तत्र ते॥ १॥

तिष्ठन्तीतीह मर्यादापालनं स्थानमीरितम्।
कृतेऽपि पातके यत्र न पातः प्रत्युतोन्नतिः॥ २॥

सानुग्रहोऽजामिलस्य भुवीन्द्रस्य यथा दिवि।
त्रिभिः षोडशभिश्चेन्द्रपापं षष्टाष्टके द्विके॥ ३॥

विश्वरूपस्य वृत्रस्य मरुतां च वधात्त्रिधा।
दक्षान्वयस्तदुत्पत्त्यै वैश्वरूपे त्रिकेऽग्रिमे।
वृत्राष्टके चतुष्केऽन्त्ये वृत्रप्राक्चित्रकेतुता॥ ४॥

अजामिलाघनाशोक्तिर्वैष्णवैर्याम्यनिग्रहः।
यमेन सान्त्वनं तेषां दक्षेणाराधनं हरेः॥ ५॥

नारदात्पुत्रनाशोऽस्य दौहित्राद्विश्वरूपभूः।
तस्य देवपुरोधस्त्वं गुरुत्वं विष्णुवर्मणि॥ ६॥

तद्वधाघाद्वृत्रभयं वृत्रवासवसङ्गरः।
वृत्रभक्तिर्ज्ञानशौर्यं वृत्रस्य मरणं रणे॥ ७॥

वृत्रहत्याप्रतीकारश्चित्रकेतोः सुताच्छुचः।
बोधोऽङ्गिरोनारदाभ्यां विद्यालाभश्च नारदात्॥ ८॥

गौरीशापाच्च वृत्रत्वं गर्भे शक्रमरुद्भिदा।
व्रतं दितिकृतं पुत्र्यं प्रत्यध्यायमिमेऽङ्घ्रयः॥ ९॥

श्रीभागवते षष्ठस्कन्धः समाप्तः॥

# Chapter 7

## सप्तमस्कन्धकथासारः

सप्तमे पञ्चदशभिरध्यायैरूतिवर्णनम्।
ऊतिः प्राक्कर्मजा कर्ता भोक्तास्मीत्यादिवासना॥ १॥

सा प्रह्लादेतिहासेन दशाध्यायेन दर्शिता।
स्वरूपतः कारणतः पञ्चाध्यायेन कर्मणा॥ २॥

प्रह्लादस्य परो रागो द्वेषः पितृपितृव्ययोः।
विष्णौ तयोरविषये कर्मणोऽसुरभावदात्॥ ३॥

द्रष्टुमीशं विहन्तुं तद्वैकुण्ठे कलहान्मिथः।
चतुःसनो हि प्रह्लाद इतरौ विजयो जयः॥ ४॥

प्राङ्निष्कामसकामाभ्यां भक्तिभ्यां वासनाद्वयम्।
द्वयोरप्येकफलता कर्मणो भोगतः क्षयात्॥ ५॥

कुमारैर्द्वाःस्थयोः शापो हिरण्यकशिपोः शुचः।
ब्रह्मणो वरलाभश्च प्रह्लादस्य च सम्भवः॥ ६॥

पित्रा परीक्षणं तस्य बालानां तेन शिक्षणम्।
नारदोक्तानुवादश्च हिरण्यकशिपोर्वधः॥ ७॥

प्रह्लादेन नृसिंहेला ततोऽस्य शिववद्यशः।
सामान्येन सदाचारस्तथा त्रिष्वाश्रमेषु च॥ ८॥

परिव्राजकधर्माश्च मोक्षधर्मा गृहाश्रमे।
श्रद्धादीनि मुमुक्षूणां यावदध्यायमङ्घ्रयः॥ ९॥

श्रीभागवते सप्तमस्कन्धः समाप्तः॥

# Chapter 8

## अष्टमस्कन्धकथासारः

मन्वन्तरार्थमध्यायास्त्रयोविंशतिरष्टमे।
मन्वन्तराणि प्रत्येकं ब्रह्माहेषु चतुर्दश॥ १॥

चत्वार्याद्येऽत्र तुर्यस्थं त्रिषु नागेन्द्रमोक्षणम्।
द्वे पञ्चमेऽत्र षष्ठस्थं सप्तस्वमृतमन्थनम्॥ २॥

त्रयोदशेऽष्टौ नवसु सप्तमे बलिबन्धनम्।
त्रयोविंशे मत्स्यकथा षष्ठसप्तमसन्धिगा॥ ३॥

मन्वन्तरं सतां धर्मो मनुभिर्यत्प्रकाश्यते।
स्मरणाचरणाख्यानैः स्वैः स्वैः सर्षिभिरन्तरे॥ ४॥

विपद्यात्मानमीशाने सम्पद्यर्थिषु चार्पयेत्।
उभयत्र प्रतिज्ञातं निर्वहेदिति स त्रिधा॥ ५॥

गजेन्द्रमोक्षणेऽम्भोधिमन्थने बलिबन्धने।
स व्यक्तस्तं झषो वेत्ति तत्त्वतस्तेन ताः कथाः॥ ६॥

ग्राहाद्बन्धो हरेर्मोक्षः प्राग्जन्मेति त्रिको गजे।
मन्दरासो विषग्रासो हरेः स्त्रीत्वं सुरे सुधा॥ ७॥

रणः सुरे जयः शम्भोः स्त्रीक्षेत्थं सप्तकोऽर्णवे।
बलेर्जयो व्रतो दित्या हरेर्जन्मार्थिता बलौ॥ ८॥

बलेर्दित्सा हरेर्वृद्धिर्निग्रहानुग्रहौ बलेः।
प्रह्लादसूक्तयश्चैवमध्यायनवको बलौ॥ ९॥

श्रीभागवते अष्टमस्कन्धः समाप्तः॥

# Chapter 9

## नवमस्कन्धकथासारः

नवमे तु चतुर्विंशत्यध्यायीशानुकीर्तनम्।
ईशा भूपतयस्तत्र रामकृष्णादयः स्वयम्॥ १॥

इतरे तन्नियोगेन तत्कथेशानुकीर्तनम्।
इलः पृषध्रः शर्यातिरम्बरीषोऽजविप्रयोः॥ २॥

मान्दाता च हरिश्चन्द्रः सगरोऽथ भगीरथः।
रामो राष्ट्रभ्रंशलाभौ कुशोऽथ मिथिलेश्वरः॥ ३॥

एलो रामोऽर्जुनक्षत्रवधयोः क्षत्रवृद्धगः।
ययातेर्भुक्तिमुक्त्योश्च पूरुस्त्रिषु यदुर्द्वयोः॥ ४॥

दौष्यन्तिरन्तिभीष्माणां प्राधान्याद्वृष्णिकृष्णयोः।
चतुर्विंशतिरित्येते राजानोऽध्यायनायकाः॥ ५॥

रामौ ययात्यम्बरीषौ चत्वारोऽष्टौ हि कर्मभिः।
त्रयोदशैकादशभिः क्रमात्तत्रार्कसोमजाः॥ ६॥

श्रीभागवते नवमस्कन्धः समाप्तः॥

# Chapter 10

## दशमस्कन्धकथासारः

निरोधो दशमे स्कन्धे नवत्यध्याय ईरितः।
निरोधो नाम सृष्टानां समाहारश्चतुर्विधः॥ १॥

नैमित्तिकः प्राकृतिको ब्रह्मणोऽन्ते दिनायुषोः।
नित्यः प्रतिक्षणं मुक्तिरात्यन्तिक इति स्मृतः॥ २॥

नैमित्तिको निरोधोऽन्यो धर्मग्लानिनिमित्तिकः।
भूमिभारावताराख्यो यदर्थं जन्म मापतेः॥ ३॥

स एष दशमे प्रोक्तो मुक्तिरेकादशे ततः।
त्रयोऽन्ये द्वादशे शुद्धं निरूपयितुमाश्रयम्॥ ४॥

तस्यावताराः कर्तारो हरेस्तेषु महत्तमः।
कृष्णावतारस्तस्यातश्चरितं दशमे मतम्॥ ५॥

गोकुले मथुरायां तद्द्वारकायां कृतं त्रिधा।
चतुश्चत्वारिंशितोक्तं सप्तभिस्तत्परैः क्रमात्॥ ६॥

प्राकटयबाल्यपौगण्डकैशोरप्रौढिभेदतः।
पञ्चधा गोकुलकृतं तच्च कंसवधाभिधम्॥ ७॥

चतुर्भिर्दशभिः शक्रैः सप्तभिर्नवभिः क्रमात्।
कंसभीर्भाविनः कृष्णाद्देवक्यां तस्य सम्भवः॥ ८॥

जतस्य गोकुलप्राप्तिर्निद्रोक्तात्कंसभीः पुनः।
व्रजे जन्मोत्सवस्तस्य तेनाथो पूतनावधः॥ ९॥

अनस्तृणावर्त्तभङ्गस्तस्य नामानि चापलम्।
दामोदरत्वमटनं यमलार्जुनभञ्जनम्॥ १०॥

वधश्च वत्सबकयोस्तथाघासुरभोगिनः।
वत्सचोरब्रह्ममोहो ब्रह्मणा स्तवनं हरेः॥ ११॥

रामेण धेनुकवधः कालियस्य स्वयं दमः।
व्रजस्य रक्षणं दावात्प्रालम्बो हलिना वधः॥ १२॥

दावाग्नोत्राणमैषीके प्रावृड्शरदृतुश्रियौ।
गोप्यानन्दो वेणुरवाद् गोपीनामम्बिकार्चने॥ १३॥

यज्वपत्नीप्रसादश्च भङ्ग इन्द्रमखस्य च।
गोवर्धनस्योद्धरणं गोपीनां देवतामतिः॥ १४॥

कृष्णाभिषेको गोदेवैर्वरुणान्नन्दमोक्षणम्।
सम्भोगो निशि गोपीभिर्विप्रलम्बो लसद्वने॥ १५॥

गोपीविरहगीतानि ताभिः सञ्जल्पनं हरेः।
रासक्रीडा च ललिता मोक्षो विद्याध्रयक्षयोः॥ १६॥

व्रजस्थगोपिकागीतं हतेऽरिष्टे च कंसभीः।
केशिव्योमवधश्चैवाक्रूरयानं व्रजं प्रति॥ १७॥

मथुराकृष्णयानं चाक्रूरेणाशु हरेः स्तुतिः।
कृष्णस्य मथुरालोकः कंसमल्लरणोद्यमः॥ १८॥

कृष्णेन मल्लहननं हते कंसे सुरोत्सवः।
चतुश्चत्वारिंशदिमेऽध्यायाः कंसवधेऽङ्घ्रिभिः॥ १९॥

कृष्णस्य विद्योपादानमुद्धवस्य व्रजागमः।
आश्वासनं च गोपीनां कुब्जाक्रूरप्रियं हरेः॥ २०॥

सङ्गोऽक्रूरस्य गुरुभिर्जरासन्धपराभवः।
यवनस्य वधोऽध्यायैः सप्तभिर्माथुरं यशः॥ २१॥

कृष्णेऽभिलाषो रुक्मिण्या रुक्मिणीहरणं हरेः।
रुक्मिणश्च पराभूतिः प्रद्युम्नाच्छम्बरक्षयः॥ २२॥

स्यमन्तकस्याहरणं सत्यभामासमुद्वहः।
कालिन्द्यादिविवाहश्च भौमं हत्वा द्रुमाहृतिः॥ २३॥

रुक्मिण्यां नर्म रहसि रुक्मयन्तो नप्तुरुद्वहे।
बाणेन बन्धनं नप्तुर्बाणस्य हरिणा जयः॥ २४॥

नृगस्य सरटत्वान्तो हलिना यमुनाभिदा।
काशीशपौण्ड्रकवधो रामेण द्विविदक्षयः॥ २५॥

पराभवः कुरूणां च हरेर्गार्हस्थ्यमद्भुतम्।
जरासन्धवधे मन्त्रो युधिष्ठिरसमागमः॥ २६॥

जरासन्धवधो भीमाद्दिग्जयश्चार्जुनादिभिः।
शिशुपालवधो यज्ञे दुर्योधनपराभवः॥ २७॥

साल्वस्य युद्धं यदुभिः साल्वस्य हरिणा वधः।
दन्तवक्त्रस्य सूतान्तो वल्वलान्तश्च सीरिणा॥ २८॥

श्रीदामकृष्णसञ्जल्पः श्रीदाम्नः सम्पदद्भुता।
सुहृत्सङ्गः कुरुक्षेत्रे कृष्णोद्वाहादिवर्णनम्॥ २९॥

वसुदेवस्य यज्ञश्च मृतपुत्रप्रदर्शनम्।
श्रुतदेवस्य चातिथ्यं वेदस्तुतिनिरूपणनम्॥ ३०॥

देवत्रयविभागश्च द्विजपुत्राहृतिस्तथा।
कृष्णकीर्त्युपसंहार इतीदं द्वारकाकृतम्॥ ३१॥

ऊनचत्वारिंशितोक्तमध्यायैः पादवर्णितैः॥

श्रीभागवते दशमस्कन्धः समाप्तः॥

# Chapter 11

## एकादशस्कन्धकथासारः

मुक्तिरेकादशस्कन्धेऽध्यायैकत्रिंशतोदिता।
तत्र कर्मज्ञाननिष्ठाभेदात्प्रकरणद्वयम्॥ १॥

पञ्चाध्यायास्तयोराद्यं तत्राद्ये युगपत्क्षयः।
विष्णुगुप्ते यदुकुले विप्रशापाद्विरक्तये॥ २॥

द्वौ चतुष्टयमेको द्वौ प्रश्नाः शेषेषु सोत्तराः।
ज्ञातुं भागवतान्धर्मान् पुंसो मायां तदत्ययम्॥ ३॥

ब्रह्मकर्मावतारालिमभक्तार्त्तिं युगस्थितिम्।
नव प्रश्नान्निमिश्चक्रे तानाचख्युर्नवार्षभाः॥ ४॥

सर्वकर्मार्पणं विष्णौ रागद्वेषविवर्जिताः।
मिथ्यार्थदर्शनासक्तिर्विपर्ययविमर्शनम्॥ ५॥

सर्वत्रानुगतं शुद्धं वेदतन्त्राच्युतार्चनम्।
पुरुषादिवपुर्लीला कालचक्रपरिभ्रमः॥ ६॥

ध्यानं योगोऽर्चनं स्तोत्रमुत्तराणि नवाङ्घ्रिभिः।
धर्मे भागवतेऽभ्यासः पुंभिर्भागवतैः सह॥ ७॥

जितमायस्य धाम स्वमारोढुं भूमिकोत्तरा।
मायाजयोऽधरा भक्तिर्ज्ञान्कर्मसमुच्चयात्॥ ८॥

अवतारकथातोऽतः काम्यत्यागेशकीर्तने।
इति भूमेश्चतसृभिरध्यायानां चतुष्टयम्॥ ९॥

वसुदेवाय जायन्तेयोपाख्यानमिदं जगौ।
मुमुक्षवे द्वारवत्यां नारदस्तद्गृहागतः॥ १०॥

विष्णोरभ्यर्थना देवैः स्वर्वसेत्युद्धवेन च।
स्वधाम नय मेत्यूचे षष्ठे संवादकारणम्॥ ११॥

चतुर्द्धा त्रीस्तथैकं द्वौ द्वावेकं चैककं द्विधा।
द्वौ द्विधा त्रींश्चतुर्द्धैकमेकमेकं च सोत्तरान्॥ १२॥

प्रश्नान् शेषेषु हित्वान्त्यौ ममाहंलयदर्शनौ।
सङ्गत्याग उपायस्य सत्सङ्गासङ्गयोः सताम्।
भक्तेर्जीवस्य विषयासक्तौ दृष्टेऽपि दूषणे॥ १३॥

हेतोर्हंससनन्दादिसंवादस्योत्तमस्य च।
श्रेयस्सु ध्यानयोगस्य सिद्धीनां च विभूतिवत्॥ १४॥

वर्णाश्रमादिधर्मस्य ज्ञानादीनां यमादिवत्।
गुणदोषापवादस्य तत्त्वसङ्ख्याव्यवस्थितेः॥ १५॥

क्षेत्रक्षेत्रज्ञभेदस्य देहयोगवियोगयोः।
अभिमाननिवृत्तेश्च क्रियायोगस्य संसृतौ॥ १६॥

अधिष्ठानस्य भक्तेश्च परस्याः सम्बुभुत्सया।
प्रश्नान्द्वाविंशतिं चक्रे कृष्णं प्रत्युद्धवः क्रमात्॥ १७॥

हेयोपादेयनिर्धारः स्वाप्ने सुप्तप्रबुद्धवत्।
मिथः कृष्णकथासक्ताः प्रेम्णैव हरिदास्ता॥ १८॥

स्वसृष्टानुप्रविष्टोऽसौ रजःसम्मिश्रसत्त्वता।
गुणचित्तोभयत्यागो भक्तिरव्यभिचारतः॥ १९॥

अरूपचिन्तनं रूपैर्ध्यातृध्येयसमानता।
तत्र तत्रोत्कटं सत्त्वं कर्मत्यागः शनैःशनैः॥ २०॥

द्वे हेये द्वे उपादेये गुणदोषावभिद्विदौ।
कर्मणि ज्ञानभक्त्योर्न सा सा सङ्ख्याप्रकल्पनात्॥ २१॥

स्वतः सिद्धः पुमान्नान्यन्मनोगन्त्रभिमान्यजः।
मनःशत्रुजयः सम्यक् प्रतिमादिष्वजार्चनम्॥ २२॥

पुमान्प्रकृत्योपगूढो विश्वमूर्तीशपूजनम्।
पादैर्द्वाविंशतिर्विष्णोरुत्तराण्युद्धवं प्रति॥ २३॥

गुरुभिः पञ्चविंशत्या लोकतत्त्वपरीक्षणे।
हीनमध्योत्तमैरष्टनवाष्टाभिस्त्रिधैकधा॥ २४॥

आत्मतत्त्वपरीक्षायां चतुर्धेत्याद्यमुत्तरम्।
ऋण्यनृण्याश्रमद्वन्द्वभेदेन द्वादशं द्विधा॥ २५॥

व्यवस्थेति तथा वेदोऽपीतिपञ्चदशं द्विधा।
भिक्षुगीतस्य साङ्ख्यस्य गुणलक्ष्यैलगीतयोः॥ २६॥

उक्त्योक्तं मनसोऽरित्वं बलं भेदो रणे जयः।
ऊनविंशं चतुर्धैव चतुर्भिर्द्वादशोत्तरैः॥ २७॥

पञ्च द्वादशभिः षड्भिः षट् त्रयोविंशतिस्ततः।
निःसङ्गत्वे गुणत्यागे भक्तिदार्ढ्येऽपकर्मणि॥ २८॥

तत्त्वज्ञाने चोपयोगात्त्रिद्विद्विद्वित्रिमेलनम्।
तद्धेतुष्वपि निष्कम्पो निःसङ्गोऽच्छेदलेपकः॥ २९॥

विशोधको मलत्यागी त्यक्तो विक्रियायाऽभिदः॥ ३०॥

निःस्नेहो दिष्टभुक्क्षोभहीनो रूपाप्रलोभितः।
सारग्राह्यस्पर्शमूढो निर्लोभो गीत्यवञ्चितः॥ ३१॥

रसामूढो विमुक्ताशो परिग्राह्यभिमानमुक्।
एक एकमना गुप्तसिद्धौका धृतनिश्चयः॥ ३२॥

ईशस्यैकस्य कर्तृत्वे ध्यातुर्ध्येयात्मना स्थितौ।
देहास्वत्वे च पुरुषः क्रियते गुरुभिः क्रमात्॥ ३३॥

पृथिवी वायुराकाशमापोऽग्निश्चन्द्रमा रविः।
कपोतोऽजगरः सिन्धुः पतङ्गो मधुकृद्गजः॥ ३४॥

मधुहा हरिणो मीनः पिङ्गला कुररोऽर्भकः।
कुमारी शरकृत्सर्प ऊर्णनाभिः सुपेशकृत्॥ ३५॥

एते मे गुरवो राजंश्चतुर्विंशतिराश्रिताः।
उपायत्वेऽन्तरङ्गास्ते क्रमात्त्रिस्कन्धता ततः॥ ३६॥

देहस्य पृथगुद्देशः श्रैष्ठ्याअन्नेदिष्ठताकृतात्॥ ३७॥

स्वोत्तरात्पृथगुद्दिष्टौ द्वितीयैकोनविंशकौ।
प्रागुत्तरेणापि योगमिह बोधयितुं तयोः॥ ३८॥

प्रथमः पञ्चमः षष्ठो दशमोऽथ त्रयोदशः।
एकविंश इति प्रश्नाः षडुत्थापनपूर्वकाः॥ ३९॥

निःसङ्गता कथं कीदृक् तन्निर्वाहश्च यैर्यथा।
भक्तेर्यो विषयस्तस्मिन्सत्यन्यस्मिन् रतिः कथम्॥ ४०॥

सा कथं भक्तितुल्यं किं कथं भक्तिर्गुणोज्झिते।
यैर्यैः कामार्थधर्मेषु यैर्मोक्षेऽन्तर्बहिर्भवैः॥ ४१॥

ते कीदृशाः श्रुतिर्भक्तिपरा च स्मृतयः कथम्।
कीदृग्भक्तः कथं दौस्थ्यमभिमानक्षयः कथम्॥ ४२॥

किं कर्मज्ञानभक्तीनां सूचितानां पुनः पुनः।
सर्वोपदेशसाराणां स्वरूपमिति सङ्गतिः॥ ४३॥

श्रीभागवते एकादशस्कन्धः समाप्तः॥

# Chapter 12

## द्वादशस्कन्धकथासारः

आश्रयो द्वादशस्कन्धे त्रयोदशभिरीरितः।
आश्रयश्च परं ब्रह्म परमात्मा रमापतिः॥ १॥

यतः प्रपञ्चधीस्तत्र सर्पे स्रग्धीरिवाश्रिता।
उपादेयानुपादेयावाश्रयाश्रयिणौ च तौ॥ २॥

अतश्चतुर्भिरध्यायैरनुपादेयतोदिता।
उत्तरोत्तरदुःस्थत्वात्स्थापकानां स्थितेरपि॥ ३॥

युगे युगेऽन्यथाभावात्कालग्रस्ततया तथा।
उपादेयत्वमेकेन परीक्षित्फलदर्शनात्॥ ४॥

श्रवणं मननं ध्यानं चेत्युपादानहेतवः।
तत्र श्रवणसिद्ध्यर्थं द्वाभ्यां शब्दस्य सम्भवः॥ ५॥

वेदोपवेदभिन्नस्य मार्कण्डेयकथा त्रिभिः।
विष्णुमायाशिवेक्षाभिर्भिन्ना मननसिद्धये॥ ६॥

मूर्तेस्तत्त्वं सूर्यगत्वमेकेन ज्ञानसिद्धये।
पुराणार्थोपसंहार एकेनैकेन तद्विदा॥ ७॥

अष्टादश दश त्रिंशत् त्र्यधिका नवविंशतिः।
षड्विंशतिर्दश नवपञ्चभिर्विंशतिस्त्रिभिः॥ ८॥

चतुर्भिश्चाथ नवतिरेकत्रिंशत्त्रयोदश।
इति भागवतेऽध्याया एकत्रिंशच्छतत्रयम्॥ ९॥

एकादिनियमेनैतानभ्यसेच्छक्तितोऽन्वहम्।
वक्ता श्रोतर्यथ श्रोता वक्तर्यन्यत्र चिन्तकः॥ १०॥

शास्त्रे स्कन्धे प्रकरणेऽध्याये वाक्ये पदेऽक्षरे।
गुरूपदिष्टो योऽर्थस्तं विमृशन्विष्णुतत्परः॥ ११॥

एकं तेजस्त्रिधा यद्वत्सूर्यमण्डलरश्मिभिः।
एकं ब्रह्म तथा तद्वद्विष्णुमायात्मभिर्मतम्॥ १२॥

मण्डलान्निर्गते सूर्येऽनेकत्वं रश्मिता यथा।
मायाया निर्गते विष्णौ तथाऽनेकत्वमात्मता॥ १३॥

यथा नयनसम्बन्धाद्द्रष्टारो रश्मयो रवेः।
तथा ज्ञातार आत्मानो देहसम्बन्धतो हरेः॥ १४॥

विशेषस्तु यथात्मानश्चेतनत्वादुपासते।
विष्णुं मायान्तरप्राप्तदुरवस्थानिवृत्तये॥ १५॥

उपासनं कर्मभक्तिज्ञानयोगैस्त्रिधा क्रमात्।
येषां धीर्विषयेऽदोषा सदोषा नैव तैः कृतम्॥ १६॥

कर्मार्पणं विष्णौ विष्णोर्वार्ता परस्परम्।
विजने चिन्तनं विष्णोर्योगानां लक्षणं क्रमात्॥ १७

इति भागवतस्यानुक्रमणी रमणी कृता।
विदुषा वोपदेवेन विद्वत्केशवसूनुना॥ १८॥

हरिलीलेति नामेयं हरिभक्तैर्विलोक्यताम्।
अस्या विलोकनादेव हरौ भक्तिर्विवर्धते॥ १९॥

इति
श्रीभागवते महापुराणे वोपदेवविरचिता
हरिलीलानुक्रमणी समाप्ता॥